कुसुमसुकुमारायाः यथा शरीरबाधा न जायेत तथाविधमुपायमाचरेति । बालचन्द्रिका तस्य प्रेमगर्भितं वचनमाकर्ण्य संतुष्टा कन्यापुरमगच्छत् ।

राजवाहनोऽपि यत्र हृदयवल्लभावलोकनसुखमलभत तदुद्यानं विरहविनोदाय पुष्पोद्भवसमन्वितो जगाम । तत्र चकोरलोचनावचितपल्लवकुसुमनिकुरम्बं महीरुहसमूहं शरदिन्दुमुख्या मन्मथसमाराधनस्थानं च नताङ्गीपदपङ्क्तिचिह्नितं शीतलसैकततलं च सुदतीभुक्तमुक्तं च माधवीलतामण्डपान्तरपल्लवतल्पं च विलोकयन्ललनातिलकविलोकनवेलाजनितशेषाणि स्मारंस्मारं मन्दमारुतकम्पितानि नवचूतपल्लवानि मदनाग्निशिखा इव चकितो दर्शंदर्शं मनोजकर्णजपानामिव कोकिलकीरमधुकराणां क्वणितानि श्रावंश्रावं मारविकारेण क्वचिदप्यवस्थातुमसहिष्णुः परिबभ्राम । तस्मिन्नवसरे धरणीसुर एकः सूक्ष्मचित्रनिवसनः स्फुरन्मणिकुण्डलमण्डितो मुण्डितमस्तकमानवसमेतश्चतुरवेषमनोरमो यदृच्छया समागतः समन्ततोऽभ्युल्लसत्तेजोमण्डलं राजवाहनमाशीर्वादपूर्वकं ददर्श । राजा सादरं को भवान्कस्यां विद्यायां निपुण इति तं पप्रच्छ । स च विद्येश्वरनामधेयोऽहमैन्द्रजालिकविद्याकोविदो विविधदेशेषु राजमनोरञ्जनाय भ्रमन्नुज्जयिनीमद्यागतोऽस्मीति शशंस । पुनरपि राजवाहनं सम्यगालोक्यास्यां लीलावनौ पाण्डुरतानिमित्तं किमिति साभिप्रायं विहस्यापृच्छत् । पुष्पोद्भवश्च निजकार्यकरणं तर्कयन्नेनमादरेण बभाषे । ननु सतां सख्यस्याभाषणपूर्वतयाचिरं रुचिरभाषणो भवानस्माकं प्रियवयस्यो जातः । सुहृदामकथ्यं किमस्ति । केलीवनेऽस्मि-

36. 6. °निकुरम्ब N.; A$^{w}$.; °निकुरम्ब° B$^{w}$.—36. 9. नानूतन° A$^{w}$., नवनूत B$^{w}$.; नवचूत° N.— 36. 16. स च om. N.—

न्वसन्तमहोत्सवायागतया मालवेन्द्रसुतया राजनन्दनस्यास्य चाकस्मिकदर्शनेऽन्योन्यानुरागातिरेकः समजायत। सततसंभोगसिद्ध्युपायाभावेनासावीदृशीमवस्थामनुभवतीति। विद्येश्वरो लज्जाभिरामं राजकुमारमुखमभिवीक्ष्य विरचितमन्दहासो व्याजहार। देव भवदनुचरे मयि तिष्ठति तव कार्यमसाध्यं किमस्ति। अहमिन्द्रजालविद्यया मालवेन्द्रं मोहयन्पौरजनसमक्षमेव तत्तनयापरिणयं रचयित्वा कन्यान्तःपुरप्रवेशं कारयिष्यामीति। वृत्तान्त एष राजकन्यायै सखीमुखेन पूर्वमेव कथयितव्य इति। संतुष्टमना महीपतिरनिमित्तमित्रं प्रकटीकृतकृत्रिमक्रियापाटवं विप्रलम्भकृत्रिमप्रेमसहजसौहार्दवेदिनं तं विद्येश्वरं सबहुमानं विससर्ज।

अथ राजवाहनो विद्येश्वरस्य क्रियापाटवेन फलितमिव मनोरथं मन्यमानः पुष्पोद्भवेन सह स्वमन्दिरमुपेत्य सादरं बालचन्द्रिकामुखेन निजवल्लभायै महीसुरक्रियमाणं संगमोपायं वेदयित्वा कौतुकाकृष्टहृदयः कथमिमां क्षपां क्षपयामीत्यतिष्ठत्। परेद्युः प्रभाते विद्येश्वरो रसभावरीतिगतिचतुरस्तादृशेन महता निजपरिजनेन सह राजभवनद्वारान्तिकमुपेत्य दौवारिकनिवेदितनिजवृत्तान्तः सहसोपगम्य सप्रणाममैन्द्रजालिकः समागत इति द्वाःस्थैर्विज्ञापितेन तद्दर्शनकुतूहलाविष्टेन समुत्सुकावरोधसहितेन मालवेन्द्रेण समाहूयमानः कक्षान्तरं प्रविश्य सविनयमाशिषं दत्त्वा तदनुज्ञातः परिजनताड्यमानेषु वाद्येषु नदत्सु गायकीषु मदकलकोकिलामञ्जुलध्वनिषु समधिकरागरञ्जितसामाजिकमनोवृत्तिषु पिञ्छिकाभ्रमणेषु स परिवारः परिवृतः भ्रामयन्मुकु-

37 5 ऐन्द्रजालिके निजकार्य° $A^{w}$, $B^{w}$ — 37 7 करिष्यामि $A^{w}$, $B^{w}$ — 37 10 तम् om N — 37 15 रसभावरीतिरिति $A^{w}$ — 37. 19 °नो विद्येश्वर. कथय° Mss 37 22 परिवृतं $A^{w}$; $B^{w}$.—

लितनयन क्षणमतिष्ठत् । तदनु विषम विषमुल्बण वमन्त फणालकरणा रत्नराजिनीराजितराजमन्दिराभोगा भोगिनो भयं जनयन्तो निश्चेरु । गृध्राश्च बहवस्तुण्डैरहिपतीनादाय दिवि समाचरन् । ततोग्रजन्मा नरसिंहस्य हिरण्यकशिपोर्दैत्येश्वरस्य विदारणमभिनीय महदाश्चर्यान्वित राजानमभाषत । राजन् अवसान समये भवता शुभसूचक द्रष्टुमुचितम् । तत कल्याणपरपरावाप्तय भवदात्मजाकारायास्तरुण्या निखिललक्षणोपेतस्य राजनन्दनस्य विवाह कार्य इति । तदवलोकनकुतूहलेन महीपालेनानुज्ञात स सकल्पिताभीसिद्धिसभावनसफुल्लवदन सकलमोहजनकमञ्जन लोचनयोर्निक्षिप्य परितो व्यलोकयत् । सर्वेषु तदैन्द्रजालिककर्मेति साद्भुत पश्यत्सु रागपल्लवितहृदयेन राजवाहनेन पूर्वसकेतसमागतामनेकभूषणभूषिताङ्गीमवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येनाग्निं साक्षीकृत्य सयोजयामास । क्रियावसाने सतीन्द्रजालपुरुषा सर्वे गच्छन्तु भवन्त इति द्विजन्मनोच्चैरुच्यमाने सर्वे मायामानवा यथायथमन्तर्भावं गता । राजवाहनोपि पूर्वसकल्पितेन गूढोपायचातुर्येणेन्द्रजालिकपुरुषवत्कन्यान्त पुर प्रविवेश । मालवेन्द्रोपि तदद्भुत मन्यमानस्तस्मै वाडबाय प्रचुरतर धन दत्त्वा विद्येश्वर त्वमिदानीं साधयेति त विसृज्य स्वयमन्तर्मन्दिर जगाम । ततोवन्तिसुन्दरी प्रियसहचरीपरिवारा वल्लभोपेता सुन्दरीमन्दिर ययौ । एव दैवमानुषबलेन मनोरथसाफल्यमुपेतो राजवाहन सरसमधुरचेष्टाभि शनै शनैर्हरिणलोचनाया लज्जामपनयन्सुरतरागमुपनयन्रहो विश्रम्भमुपजनय

38 19 सुन्दरीमन्दिरम् N —38 21 सुरतरागमुपनयन् om A* —

न्सलापे तदनुलापपीयूषपानलोलश्चित्रचित्र चित्तहारिण चतुर्दशभुवनवृत्तान्त श्रावयामास ॥

इति श्रीदण्डिन. कृतौ दशकुमारचरितेवन्तिसुन्दरीपरिणयो नाम पञ्चम उच्छ्वास ॥

॥ पूर्वपीठिकेय सपूर्णा ॥

---

30 1 °लोलुप B*, A*—भवन्तिसुदरीपरिणयो नाम पञ्चम उच्छ्वास ॥ om λ —

---

## ॥ दशकुमारचरितम् ॥

श्रुत्वा तु भुवनवृत्तान्तमुत्तमाङ्गना विस्मयविकासिताक्षी सस्मितमिदमभाषत । दयित त्वत्प्रसादादद्य मे चरितार्था श्रोत्रवृत्तिः । अद्य मे मनसि तमोपहस्त्वया दत्तो ज्ञानप्रदीपः । पक्वमिदानीं त्वत्पादपद्मपरिचर्याफलम् । अस्य च त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम् । अभवदीयं हि नैव किंचिन्मत्सम्बद्धम् । अथवास्त्येवास्यापि जनस्य क्वचित्प्रभुत्वम् । अशक्यं हि मदिच्छया विना सरस्वतीमुखग्रहणोच्छेषणीकृतो दशनच्छद एष चुम्बयितुमम्बुजासनास्तनतटोपभुक्तमुरःस्थलं चैतदालिङ्गयितुमिति । प्रियोरसि प्रावृषीव नभस्युपास्तीर्णगुरुपयोधरमण्डला प्रौढकन्दलीमुकुलमिव रूढरागरूषितं चक्षुरुल्लासयन्ती बर्हिबर्हावलीविडम्बिना कुसुमचन्द्रकशारेण मधुकरकुलव्याकुलेन केशकलापेन स्फुरदल्पकेसरकरालं कदम्बकुड्मलमिव कान्तस्याधरमणिमधीरमाचुचुम्ब । तदारम्भस्फुरितया च रागवृत्त्या भूयोभूयः प्रावर्ततातिमात्रचित्रोपचारशीकरो रतिप्रबन्धः । सुरतखेदप्रसुप्तयोस्तु तयोः स्वप्ने विसगुणनिगडितपादो जरठः कश्चिज्जालपादः प्रत्यदृश्यत । प्रत्यबुध्येतां चोभौ । अथ तस्य राजकुमारस्य कमलमृदुशशिकिरणरज्जुदामनिगडितमिव रजतशृङ्खलोपगूढ

---

40 9 तन प्रियोरसि W —40 11 भावली om Ar Pad 1 as बर्ही मयूर ॥ ... तस्य कलाप रिच्छानि विडम्बयता निर्भर्त्सयता ॥ and may therefore have read बर्हिबर्हाण विडम्बयता ॥ 40 12 कदम्बमुकुलमिव W C We acodg to G S बन्धूककुसुम Ar—40 14 भूयोभ्यावर्तत G C—40 15 सुरतखेद° om W—सुप्त° Ar C—40 15 तु om S G Ar, °निगडितचरण G Ar जरज्जालचा° Ahd Bhd S—

चरणयुगलमासीत् । उपलभ्यैव च किमेतदित्यतिपरित्रासविह्वला मुक्तकण्ठमाचक्रन्द राजकन्या । येन तत्सकलमेव कन्यान्तःपुरमग्निपरीतमिव पिशाचोपहतमिव वेपमानमनिरूप्यमाणतदात्वायतिविभागमगण्यमानरहस्यरक्षासमयमवनितलविप्रविध्यमानगात्रमाक्रन्दविदीर्यमाणकण्ठमश्रुस्रोतोवगुण्ठितकपोलमाकुलीबभूव । तुमुले चास्मिन्समयेनियन्त्रितप्रवेशाः किंकिमिति सहसाभ्युपेत्य विविशुरन्तर्वंशिका पुरुषा ददृशुश्च तदवस्थं राजकुमारम् । तदनुभावनिरुद्धनिग्रहेच्छास्तु ते सद्य एव तमर्थं चण्डवर्मणे निवेदयाचक्रुः ।

सोपि कोपादागत्य निर्दहन्निव दहनगर्भया दृशा निशाम्योत्पन्नप्रत्यभिज्ञः कथं स एवैष मदनुजमरणनिमित्तभूतायाः पापाया बालचन्द्रिकायाः पत्युरत्याभिनिविष्टचित्तदर्पस्य वैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं रूपमत्तः कलाभिमानी नैकविधविप्रलम्भोपायपाटवावर्जितमूढपौरजनाध्यारोपितवितथदेवतानुभावः कपटधर्मकञ्चुको निगूढपापशीलश्चपलो ब्राह्मणब्रुवः । कथमिवैनमनुरक्ता मादृशेष्वपि पुरुषसिंहेषु सावमाना पापेयमवन्तिसुन्दरी । पश्यतु पतिमद्यैव शूलावतंसितमियमनार्यशीला कुलपांसनी । इति निर्भर्त्सयन्भीषणभ्रुकुटिदूषितललाटः काल इव काललोहदण्डकर्कशेन बाहुदण्डेनावलम्ब्य हस्ताम्बुजे रेखाम्बुजरथाङ्गलाञ्छने राजपुत्रं सरभसमाचकर्ष । स तु स्वभावधीरः सर्वपौरुषातिभूमिः सहिष्णुतैकप्रतिक्रियां दैवीमिव तामापदमवधार्य स्मरन् तस्या हंसगामिनि हंसकथायाः

---

41 1 च om S Ar G 41. 2 येन च Pad 41 ॥ राजकन्यान्त ° G W — 41 ॥ कपोलतलः G C W — समये om Ar, G W — 41 6 विर दयमासु G, C 41 13 जनमिथ्याारोपित° G, Ar S —

सहस्व वा मासद्वयमिति प्राणपरित्यागरागिणीं प्राणसमां समाश्वास्यारिवश्यतामयासीत् ।

अथ विदितवार्तावार्तौ महादेवीमालवेन्द्रौ जामातरमाकारचक्रपातिनावात्मत्यागोपन्यासेनारिणा जिघांस्यमानं ररक्षतुः । न शेकतुस्तु तमप्रमुत्यास्तारयितुमापदः । स किल चण्डशीलश्चण्डवर्मा सर्वमिदमुदन्तजातं राजराजगिरौ तपस्यते दर्पसाराय संदिश्य सर्वमेव पुष्पोद्भवकुटुम्बकं सर्वस्वहरणपूर्वकं सद्य एव बन्धने क्षिप्त्वा कृत्वा च राजवाहनं राजकेसरिकिशोरकमिव दारुपञ्जरनिबद्धं, मूर्धजजाललीनचूडामणिप्रभावविक्षिप्तक्षुत्पिपासादिखेदं च तमवधूतदुहितृप्रार्थनस्याङ्गराजस्योद्धरणायाङ्गानभियास्यन्ननन्यविश्वासान्निनाय रुरोध च बलभरदत्तकम्पश्चम्पाम् । चम्पेश्वरोऽपि सिंहवर्मा सिंह इवासह्यविक्रमः प्राकारं भेदयित्वा महता बलसमुदायेन निर्गत्य स्वप्रहितदूतव्राताहूतानां साहाय्यदानायातिसत्वरमापततां धरापतीनामचिरकालभाविन्यपि संनिधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मानक्षमापरीतः प्रतिबलं प्रतिजग्राह । जगृहे च महति संपराये क्षीणसकलसैन्यमण्डलः प्रचण्डप्रहरणशतभिन्नवर्मा सिंहवर्मा कारिणः करिणमवप्लुत्यातिमानुषप्राणबलेन चण्डवर्मणा । स च तद्दुहितर्यम्बालिकायामबलारत्नसमाख्यातायामतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत् । अपि त्वनीनयदपनीताशेषशल्यमकल्पसंधौ बन्धनगृहम् । अजीगणच्च गणकसंघैरद्यैव क्षपावसाने विवाहनीया राजदुहितेति । कृतकौतुकमङ्गले च तस्मिन्नेकपिङ्गाचलात्प्रतिनिवृत्य·

42. 1. मासद्वयमपि Ar.—रिपुर° W; C.—42. 8. भिरसमूर्धे° W.—42. 15 प्रक्षीण° G; Ar., C—42. 16. भिन्नवर्मा W.; C.—42. 17. अतिमानुषबलेन Ar, S.—42. 19. मकल्पसंधौ or मकल्प° G; C.; Ar; Ab[d]., Bhd S—

र्णजङ्घो नाम जङ्घाकरिकः प्रभवतो दर्पसारस्य प्रतिसंदेशमावेदयत् । अयि मूढ किमस्ति कन्यान्तःपुरदूषकेऽपि कश्चित्कृपावसरः । स्थविरः स राजा जरावलुप्यमानावमानचित्तो दुश्चरितदुहितृपक्षपाती यदेव किंचित्प्रलपति त्वयापि किं तदनुमत्या स्थातव्यम् । अविलम्बितमेव तस्य कामोन्मत्तस्य चित्रवधवार्ताप्रेषणेन श्रवणोत्सवोऽस्माकं विधेयः । सा च दुष्टकन्या सहानुजेन कीर्तिसारेण निगडितचरणा चारके निरोद्धव्येति । तदाकर्ण्य प्रातरेव राजभवनद्वारे स दुरात्मा कन्यान्तःपुरदूषकः संनिधापयितव्यश्चण्डपोतकस्य मातङ्गपतिरुचितकल्पनोपपन्नस्तत्रैव समुपस्थापनीयः । कृतविवाहकृत्यश्चोत्थायाहमेव तमनार्यशीलं तस्य हस्तिनः कृत्वा क्रीडनं तदधिरूढ एव गत्वा शत्रुसाहाय्यकाय प्रत्यासीदतो राजन्यकस्य सकोशवाहनस्यावग्रहणं करिष्यामीति पार्श्वचरानवेक्षांचक्रे ।

निन्ये चासावहन्यन्यस्मिन्नुन्मिषत्येवोपरागे राजपुत्रो राजाङ्गणं रक्षिभिरुपतस्थे च क्षरितगण्डश्चण्डपोतकः । क्षणे च तस्मिन्नमुचे तदङ्घ्रियुगलं रजतशृङ्खलया । सा चैनं चन्द्रलेखाच्छविः काचिदप्सरोरूपिणी भूत्वा प्रदक्षिणीकृत्य प्राञ्जलिर्व्यजिज्ञपत् । देव दीयतामनुग्रहार्द्रं चित्तम् । अहमस्मि सोमरश्मिसंभवा सुरतमञ्जरी नाम सुरसुन्दरी । तस्या मे नभसि नलिनलुब्धमुग्धकलहंसानुबद्धवक्त्रान्तर्निवारणक्षोभविच्छिन्नविगलिता हारयष्टिर्यदृच्छया जातु

42. 2. कन्यापुर° W.; we accdg. to Pa[d].—43. 4. °अनुमत्य स्थातं Ar.; S.—43. 5. भवणमस्माकं श्रवणोत्सवो वि° Ar.; S.—43. 8. कन्यापुर° W.; we accdg. to Pa[d]. क्षणेन Pa[d].; G.; C.—43. 10. अनार्य W.; C.; Ar.—43. 10. क्रीडनं C.; W.; G; Ar.; S; Bhū. mentions it as v. l. कन्दित; सहायाय C.; S. Bhū.—43. 12. अवग्रहं Bhū. C.; Ar.; Ah[d].,G.; we accdg. to Pa[d]. S.—43. 14. राजाङ्गणे W.; Ar.; G.—43. 16. अप्सरो C.; S.; अप्सरा G.—43. 18. नभसि वलितनलिन° G; S.—

हैमवते सरसि मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितमपतत्। पातितश्च कोपितेन कोपि तेन मयि शापः। पापे मत्तस्य लोहजातिमजावचैतन्या सतीति। स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं संदानितामेत्य निस्सरणीयामिमामापदमपरिक्षीणशक्तित्वं चेन्द्रियाणामकल्पयत्। अनल्पेन च पाप्मना रज्जुतया दुर्लभूतां मामिक्ष्वाकस्य राज्ञो वेगवतः पौत्रः पुत्रो मानसवेगस्य वीरशेखरो नाम विद्याधरः शंकरगिरौ समभ्यगमत्। आत्मसात्कृता च तेनाहमासम्। अथासौ पितृप्रयुक्तवैरे वर्तमाने विद्याधरचक्रवर्तिनि वत्सराजवंशवर्धने नरवाहनदत्ते विरसाशयस्तदपकारक्षमोयमिति तपस्यता दर्पसारेण सह समसृज्यत। प्रतिश्रुत च तेनास्मै स्वस्वसुरवन्तिसुन्दर्याः प्रदानम्। अन्यदा तु वियति व्यवदायमानचन्द्रिके मनोरथप्रियतमामवन्तिसुन्दरीं दिदृक्षुरवरोधव्यस्तादिन्द्रमन्दिरद्युति कुमारीपुरमुपासरदनारतस्मरस्मारिण्या विद्यया। स च तां तदा त्वदङ्कापाश्रयां सुरतखेदसुप्तगात्रीं त्रिभुवनसर्गयात्रासंहारसंश्रिताभिः कथाभिरमृतस्यन्दिनीभिः प्रत्यानीयमानरागपूर्वां व्यरूपयत्। स तु प्रकोपितोपि त्वदनुभावप्रतिबद्धनिग्रहान्तराध्यवसायः समालिङ्ग्येतरेतरमत्यन्तसुखमनुसंसेवुषयोर्दैवदत्तोत्साहः पाण्डुलोहशृङ्खलात्मना मया पादपद्मयुगलं तव निगडयित्वा सरोषरभसमपासरत्। अवसितश्च ममाद्य शापस्तच्च मासद्वयं तव पारतन्त्र्यम्। प्रसीदेदानीं किं तव करवाणीति

44. 3. कोपि om. S. G. Ar. W. मयि om. S, G. Ar.;—44. 3 भव G; Ar.—44. 5 पञ्चेन्द्रियाणां W.;—44. 6. दुर्लभा° G.; दुर्लभूतं….कृतम् Ar.—44. 8 वर्तमाने Pad.—44. 14. स च C.; Ar.—°भूतामादाय मां S. G.—44. 14 तदा° W.; सुरतखेद° om. W.;—44. 16. तु om. om. W; C.; G.—W.; S; कुपितोपि S—44. 20 तव om. W.; G.—

प्रणिपतन्तीं वार्तयानया मत्प्राणसमां समाश्वासयेति व्यादिश्य विससर्ज ।

तस्मिन्नेव क्षणान्तरे हतोहतश्चण्डवर्मा सिंहवर्मदुहितुरम्बालिकायाः पाणिस्पर्शरागप्रसारिते बाहुदण्ड एव बलवदवलम्ब्य सरभसमाकृष्य केनापि दुष्करकर्मणा तस्करेणैकेनैव नखरप्रहारेण राजमन्दिरोद्देशे च शवशतमयमापादयन्नचकितगतिरसौ विहरतीति वाचः समभवन् । श्रुत्वा चैतत्तमेव मत्तहस्तिनमुद्दस्ताधोरणो राजपुत्रोधिरुह्य रहसोत्तमेन राजभवनमभ्यवर्तत । स्तम्बेरमस्यावधूतपत्तिर्दत्तवर्मा च प्रविश्य वेश्माभ्यन्तरमदभ्राम्बुनिर्घोषगम्भीरेण स्वरेणाभ्यधात् । कः स महापुरुषो येनैतन्मानुषमात्रदुष्करं महत्कर्मानुष्ठितम् । आगच्छतु स मया सहैव मत्तहस्तिनमारोहतु । अभयमेव तस्य मदुपकण्ठवर्तिनो देवदानवैरपि विगृह्णानस्येति । निशम्यैवं स पुमानुपोढहर्षो निर्गत्य कृताञ्जलिराक्रम्य संत्रासकुञ्चित कुञ्जरगात्रमसक्तमभ्यरुक्षत् । आरोहन्तमेवैनं निर्वर्ण्य हर्षोत्फुल्लदृष्टिरयं प्रियसखोऽयमपहारवर्मैवेति पश्चादभिपेदुषोऽस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितमग्रेऽवलम्ब्य स्वमङ्कमालिङ्गयामास । स्वयं च पृष्ठतो वलिताभ्यां भुजाभ्यां पर्यवेष्टयत् । तत्क्षणोपसंहृतालिङ्गनव्यतिकरश्चापहारवर्मा चापचक्रकणपकर्पणप्रासपट्टिशमुसलतोमरादिप्रहरणजातमुपयुञ्जानो बलाश्लिष्टान्प्रतिबलवीरान्बहुप्रका-

---

45. 1. प्रणमयाना W.—45. 6. दुष्करकर्मकारिणा W.; C., G.; A[r].; S —45. 5 एकेनैव om. Pa[d]. but mentions it as v l.—45. 8. राजपुत्र om. G S. A[r].—45. 10 दैवेन S. G.—45. 12. व्यवदत् W.; A[r]. अभ्यर्दीत् G.—45 13 संत्रासकुञ्चित G ; C, W.—45. 15. एव om. S. G A[r].—45. 18. °कर्णप्रास° Bhü—45. 19. प्रहरणजातं W.—उपयुञ्जाना. प्रेरयन्त Pa[d]. which possibly points to उपयुञ्जानान्.—

रथोधिनः परिक्षिपतः क्षितौ विचिक्षेप। क्षणेन चाद्राक्षीत्तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता बलनिकायेन परिक्षिप्तम्।

अनन्तरं च कश्चित्कर्णिकारगौरः कुरुविन्दसवर्णकुन्तलः कमलकोमलपाणिपादः कर्णचुम्बिदुग्धधवलस्निग्धनीललोचनः कटितटनिबिडरत्ननखरः पट्टनिवसनः कृशाकृशोदरोरःस्थलः कृतहस्ततया रिपुकुलमिषुवर्षेणाभिवर्षन्पादाङ्गुष्ठनिष्ठुराकृष्टकर्णमूलेन प्रजविना गजेन संनिकृष्य पूर्वोपदेशप्रत्ययादयमेव स देवो राजवाहन इति कृताञ्जलिः प्रणम्यापहारवर्माणि निविष्टदृष्टिरावष्ट। त्वदादिष्टेन मार्गेण संनिपातितमेतदङ्गराजसाहाय्यदानायोपस्थितं राजकम्। अरिबलं च विहतविध्वस्तं स्त्रीबालहार्यशस्त्रं वर्तते। किमन्यत्कृत्यमिति। हृष्टस्तु व्याजहारापहारवर्मा। देव दृष्टिदानेनानुगृह्यतामयमाज्ञाकरः। सोऽयमहमेवामुना रूपेण धनमित्राख्यया चान्तरितो मन्तव्यः। स एवाथ निर्गमय्य बन्धनादङ्गराजमपवर्जितं कोशवाहनमेकीकृत्यास्मद्वशेन चामुना सह राजकेनैकान्ते सुखोपविष्टमिह देवमुपतिष्ठतु यदि न दोष इति। देवोऽपि यथा ते रोचत इति समाभाष्य गत्वा च तन्निर्दिष्टेन मार्गेण नगराद्बहिरतिमहतो रोहिणद्रुमस्य कस्यचित्क्षौमावदातसैकते गङ्गातरंगपवनपातशीतले तले द्विरदादवततार। प्रथमसमवतीर्णेनापहारवर्मणा च स्वहस्तसत्वरसमीकृते मातङ्ग इव भा-

---

46. 3. अन्तरे च G; Bhd. Ah[d]—46. 6. इषुवर्षेणाभिवर्ष्य G.; S.;—46. 8. राजन्यकं C; W.—46. 10. अखिलमरिबलं S; Bhd; अखिलं चारि° G.—46. 12. सोऽयमपरश्चैव W., C.; S; °हमिव G.; सोऽयमेव हि Pa[d]; सोऽयमहमिव A[r]—46. 13. एवाद्य W.,—46. 14. राजन्यकेन W.; C, S; G; we acodg. to Pa[d].—46. 15. च om. and गत्वा after मार्गेण G; A[r].—46. 16. कस्यचिन्मूले A[r]; S; W.,—46. 18. स्फटिकानस इव भागीरथी° A[r]. स्फटिकमय इव भा° W.; मातङ्ग इव om. A[r].—

गीरथीपुलिनमण्डले सुखं निषसाद । तथा निषण्णं तमुपहारवर्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुतैर्मैथिलेन च प्रहारवर्मणा काशिभर्त्रा च कामपालेन चम्पेश्वरेण सिंहवर्मणा सहागत्य धनमित्रः प्रणिपपात । देवोऽपि दृष्ट्वा तानभ्युत्थितः । अथ समस्त एव मित्रगणः समागतः को नामायमभ्युदय इति कृतयथोचितोपचारोऽनुरूपीडिततरं परिरेभे । काशीपतिमैथिलाङ्गराजाश्च सुहृन्निवेदितान्पितृवदपश्यत् । तैश्च हर्षनिर्भरतरं सरभसोपगूढः परमभिननन्द । ततः प्रवृत्तासु प्रीतिसंकथासु प्रियवयस्यगणानुयुक्तः स्वस्य च सोमदत्तपुष्पोद्भवयोश्चरितमनुवर्ण्य सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावस्तांश्च तदुक्तावन्वयुङ्क्त । तेषु प्रथमं प्राह स्म किलोपहारवर्मा ॥

॥ इति श्रीदण्डिनः कृतौ दशकुमारचरिते महाकाव्ये प्रथम उच्छ्वासः ॥

---

47 3 सहोपगम्य W , C —47 4 समस्त एव W C —47 5 समुपागत A^r S —47 5 °रुपचारम्° S , A^r —47 7 हर्षोत्पन्नपुलित C ■ W Bhū हर्षनिर्भरतर Ms W note हर्षनिर्भरसरभसो° G —सहसोपगूढ S —

देव त्वयि तदावतीर्णे द्विजोपकारायासुरविवरं त्वदन्वेषणप्रसृते च मित्रगणेऽहमपि महीमटन्नङ्गेषु गङ्गातटे बहिश्चम्पायाः कश्चिदस्ति तपःप्रभावोत्पन्नदिव्यचक्षुर्मरीचिर्नाम महर्षिरिति कुतश्चित्संलपतो जनसमाजादुपलभ्यामुतो बुभुत्सुस्त्वद्गतिं तमुद्देशमगमम्। न्यशामयं च तस्मिन्नाश्रमे कस्यचिच्चूतपोतकस्य छायायां कमप्युद्विग्नवर्णं तापसम्। अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः क्वासौ भगवान्मरीचिः तस्मादहमुपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदो गतिम्। आश्चर्यज्ञानविभवो हि स महर्षिर्महीयां विश्रुत इत्यवादिषम्। अथासावुष्णमायतं च निःश्वस्याशंसत्। आसीत्तादृशो मुनिरस्मिन्नाश्रमे। तमेकदा काममञ्जरी नामाङ्गपुरीवतंसस्थानीया वारयुवतिरश्रुबिन्दुतारकितपयोधरा सनिर्वेदमभ्युपेत्य कीर्णशिखण्डास्तीर्णभूमिरभ्यवन्दिष्ट। तस्मिन्नेव च क्षणे मातृप्रमुखस्तदाप्तवर्गः सानुक्रोशमनुप्रधावितस्तत्रैवावनिपातमपतत्। स किल कृपालुस्तं जनमार्द्रया गिराश्वास्यार्तिकारणं तां गणिकामपृच्छत्। सा तु सव्रीडेव सविषादेव सगौरवेव चाब्रवीत्। भगवन् ऐहिकस्य सुखस्य भाजनं जनोऽयमामुष्मिकाय श्रेयसीयाशाभ्युपपत्तिवित्तयोर्भगवत्पादयोर्मूलं शरणमभिप्रपन्न इति। तस्यास्तु जनन्युद्रचिताञ्जलिः पलितशारशिखण्डबन्धस्पृष्टमुक्तभूमिरभाषत। भगवन् अस्या मे दोषमेषा वो दासी विज्ञापयति। दोषश्च मम स्वाधिकारानुष्ठानम्। एष हि गणिकामा-

48 1. °प्रविश्ये Pa[d] —48 ॥ आश्रमे W —48. 10 अङ्गपुर्यवतंस° W, C ?, Bhû wo accdg ॥ Pa[d], S Ah[d] and Bhu ? I—48 11 °अभ्येत्य W C —48 12 तदासीनयी W.—48 13 °अविज्ञापयत W. C, गिराश्वास्य W. C —48 18. भयो W, Bhû दोष एषा W —

तुरधिकारो यद्दुहितुर्जन्मनः प्रभृत्येवाङ्गक्रिया तेजोबलवर्णमेधासंवर्धनेन दोषाग्निधातुसाम्यकृता मितेनाहारेण शरीरपोषणमा पञ्चमाद्वर्षात्पितुरप्यनतिदर्शनं जन्मदिने पुण्यदिने चोत्सवोत्तरो मङ्गलविधिरध्यापनमनङ्गविद्यानां साङ्गानां नृत्यगीतवाद्यनाट्यचित्रास्वाद्यगन्धपुष्पकलासु लिपिज्ञानवचनकौशलेषु च सम्यग्विनयनं शब्दहेतुसमयविद्यासु वार्तामात्रावबोधनमाजीवज्ञाने क्रीडाकौशले सजीवनिर्जीवासु च द्यूतकलास्वभ्यन्तरीकरणमभ्यन्तरकलासु वैश्वासिकजनात्प्रयत्नेन प्रयोगग्रहणं यात्रोत्सवादिष्वादरप्रसाधितायाः स्फीतपरिबर्हायाः प्रकाशनं प्रसङ्गवत्यां संगीतादिक्रियायां पूर्वसंगृहीतैः प्राश्निकैः सिद्धिलम्भनं दिक्षु तत्तच्छिल्पवित्तकैर्यशःप्रख्यापनं कार्तान्तिकादिभिः कल्याणलक्षणोद्घोषणं पीठमर्दविटविदूषकैर्भिक्षुक्यादिभिश्च नागरिकपुरुषसमवायेषु रूपशीलमाधुर्यप्रस्तावना युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन शुल्केनावस्थापनं स्वतो रागान्धाय तद्भावदर्शनोन्मादिताय वा जातिरूपवयोर्थशक्तिशौचत्यागदाक्षिण्यशिल्पमाधुर्योपपन्नाय स्वतन्त्राय प्रदानमधिकगुणायास्वतन्त्राय प्राज्ञतमायाल्पेनापि बहुव्यपदेशेनार्पणमस्वतन्त्रेण वा गान्धर्वसमागमेन तद्गुरुभ्यः शुल्कापहरणमलाभेऽर्थस्य कामस्वीकृते स्वामिन्यधिकरणे वा साधनं रक्तस्य दुहित्रैकचारिणीव्रतानुष्ठापनं नित्यनैमित्तिकप्रीतिदायकतया हृतशिष्टानां गम्यधनानां चित्रैरुपायैरपहरणमददता लुब्धप्रायेण च विगृह्यासनं प्रतिहस्तिप्रोत्सा-

49 1 पतु om घ C — 49 2 मितमहारेण घ — 49 3 °दिनेषु twice G, °दिने °दिनेषु C °दिने twice Pa^d — 49 11 उद्घोषण W, घोषण S — 49 12 प्रस्तावना W — 49 13 ऽवस्थापन S — 49 17 गुरुभ्य W — 49 18 अधिकरणे S वा om Bhd च Pa^d — रक्तस्य C, G —

धनेन लुब्धस्य रागिणस्त्यागशक्तिसंधुक्षणमसारस्य वाङ्मात्रक्षणैर्लोकोपक्रोशनैर्दुहितृनिरोधनैर्व्रीडोत्पादनैरन्याभियोगैरवमाननैश्चापवाहनमर्थैरनर्थप्रतिघातिभिश्चानिवृत्तैरनुबद्धार्थानर्थसंशयान्विचार्य भूयोभूयः स्वयं जनामि। गणिकायाश्च गम्यं प्रति सज्जैव न सङ्गः, सत्यामपि प्रीतौ न मातुर्मातृकाया वा शासनातिवृत्तिः। एवं स्थितेऽनया प्रजापतिविहितं स्वधर्ममुल्लङ्घ्य क्वचिदागन्तुके रूपमात्रधने विप्रयूनि स्वेनैव व्ययेन रममाणया मासमात्रमत्यवाहि। गम्यजनश्च भूयानर्थयोग्यः प्रत्याचक्षाणयानया प्रकोपितः। स्वकुटुम्बकं चावसादितम्। एषा कुमतिर्न कल्याणीति निवारयन्त्यां मयि वनवासाय कोपात्प्रस्थिता। सा चेदियमध्यवसायनिश्चया, सर्व एव जनोऽत्रैतां शरणागतिमनशनेन संस्थास्यत इत्यरोदीत्।

अथ सा वारयुवतिस्तेन तापसेन 'भद्रे ननु दुष्करोऽयं वनवासः। तस्य फलमपवर्गः स्वर्गो वा। प्रथमस्तु तयोः प्रकृष्टज्ञानसाध्यः प्रायो दुःसंपाद एव। द्वितीयस्तु सर्वस्यैव सुलभः कुलधर्मानुष्ठायिनः। तदशक्यारम्भादुपरम्य मातुर्मते वर्तस्व' इति सानुकम्पमभिहिता। सा तु प्रत्यवादीत्। यदि भगवत्पादमूलमशरणं शरणमस्तु मम कृपणायाः हिरण्यरेता देव एवेत्युदमनायत। स तु मुनिरनुविमृश्य गणिकामातरमवदत्। संप्रति गच्छ गृहान्। प्रतीक्षस्व कानिचिद्दिनानि यावदियं सुकुमारी सुखोपभोगसमुचिता सत्यरण्यवासोद्वेजिता भूयोभूयश्चास्माभिर्बोध्यमाना प्रकृतावेव स्थास्यतीति।

तथेति तस्याः प्रतियाते स्वजने सा गणिका तमृषिमभ्युपाक्त

---

50 [illegible] C W. — 0 7 [illegible] C W — 50 11 [illegible] W — 50 17 हिरण्यरेता एव W — हिरण्यरेता [illegible] S — 50 19 [illegible] G, °[illegible] C — 50 21. °[illegible] Pa —

यनानि समकुर्वन् । अनुमतमुनिशासनस्त्वहमहमनेनैव सहोपास्य संध्यामनुरूपाभिः कथाभिस्तमनुशय्य नीतरात्रिः प्रत्युषस्युदयप्रस्थदावकल्पे कल्पद्रुमकिसलयाधीरिण्यरुणार्चिषि तं नमस्कृत्य नगरायोदचलम् । अदर्शं च मार्गाभ्यासवर्तिनः कस्यापि क्षपणकविहारस्य बहिर्विविक्ते रक्ताशोकखण्डे निषण्णमस्पष्टसमाधिमाधिक्लिष्टमनिष्टमभिरूपाणां कृपणवर्णं कमपि क्षपणकम् । उरसि चास्य शिथिलितमलनिचयान्मुखान्निपततोऽश्रुबिन्दूनलक्षयम् । अप्राक्षं चान्तिकोपविष्टः । क्व तपः क्व च रुदितम् । न चेद्रहस्यमिच्छामि श्रोतुं शोकहेतुमिति । सोऽब्रवीत् । सौम्य श्रूयताम् । अहमस्यामेव चम्पायां निधिपालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम । वैरूप्यात्तु मम विरूपक इति प्रसिद्धिरासीत् । अन्यश्चात्र सुन्दरक इति यथार्थनामा कलागुणैः समृद्धो वसुना नातिपुष्टोऽभवत् । तस्य च मम च वपुर्वसुनी निमित्तीकृत्य वैरं वैरोपजीविभिः पौरधूर्तैरुदपादि । तैरेव कदाचिदावयोरुत्सवसमाजे स्वयमुत्पादितमन्योन्यावमानमूलमधिक्षेपवचनव्यतिकरमुपशमय्य । न वपुर्वसु वा पुंस्त्वमूलम् । अपि तु यः प्रकृष्टगणिकाप्रार्थ्ययौवनो स एव पुमान् । अतो युवतिललामभूता काममञ्जरी यं वा कामयते स हरतु सुभगपताकामिति व्यवस्थापयन् । तदभ्युपेत्याश्रु प्राहिणुव तस्यै दूतान् । अहमेव किलास्याः स्मरोन्मादहेतुरासम् । आसीनयोश्चावयोर्मामेवोपगम्य सा नीलोत्पलमयमिवापाङ्गमङ्के मम मुञ्चन्ती तं जनमपत्रपयाधोमुखं

54. 4 कस्यापि° W Bhā Ap^d —54 7 निशान्तेषु W —54 10 तु om W —54 11 न एव om. S —54 15, °वचनव्यतिकर° G °वचनव्यतिकरमान° S —54 16 प्रकृष्ट- नी हि °गुणसु° C , W —54 18. तदभ्यु° om W C —54 20 अपाङ्गम W, C, S Bhā, we accdg to G and Pa^d —

व्यधत्त। सुभगमन्येन च मया स्वधनस्य स्वगृहस्य स्वगणस्य स्वदेहस्य स्वजीवितस्य च सैवेश्वरी कृता कृतश्चाहमनया मल्लमल्लककोषो हृतसर्वस्वतया चापवाहितः प्रपद्य लोकोपहासलक्ष्यताम्। अक्षमश्च धिक्कृतानि पौरवृद्धानां सोढुमिह जैनायतने मुनिनैकेनोपदिष्टमोक्षवर्त्मा। सुकर एष वेशो वेशनिर्गतानामत्युदीर्णवैराग्यस्तदपि कौपीनमजहाम्। अथ पुनः प्रकीर्णमलपङ्कः प्रबलकेशलुञ्चनव्यथः प्रकृष्टतमक्षुत्पिपासादिदुःखः स्थानासनशयनभोजनेषु द्विप इव नवग्रहो बलवतीभिर्यन्त्रणाभिरुद्वेजितः प्रत्यवामृशम्। अहमस्मि द्विजातिः। अस्वधर्मो ममैष पाषण्डपथावतारः। श्रुतिस्मृतिविहितेनैव वर्त्मना मम पूर्वजाः प्रावर्तन्त। मम तु मन्दभाग्यस्य निन्द्यवेशमन्दःखायतनं हरिहरहिरण्यगर्भादिदेवतापवादश्रवणनैरन्तर्यात्प्रेत्यापि निरयफलमफलं विप्रलम्भप्रायमीदृशमिदमधर्मवर्त्म धर्मवत्समाचरणीयमासीदिति। मत्याकलितस्वदुर्नयः पिण्डीखण्डं विविक्तमेतदासाद्य पर्याप्तमश्रु मुञ्चामीति। श्रुत्वा चैतदनुकम्पमानो ऽवम् भद्र क्षमस्व कंचित्कालमत्रैव निवस। निजेन तुन्त्रेनासावे वेश्या यथा त्वां योजयिष्यति तथा यतिष्ये। सन्त्युपायास्तादृशाः।

४। इत्याश्वास्य तमनुस्थितोहम्। नगरमाविशन्नेव चोपलम्भय लोकवादाल्लुब्धसमृद्धपूर्णं पुरमित्यर्थानां नश्वरत्वं च प्रदर्श्य प्रकृतिस्थान

54 1 सुभगम° G C S W wo accdg to Pa[d] —5 3 हृतसर्वस्वतया वा° C च om W —55 4 इदानीं W, उत्पन्न उत्तमो व° W —55 6 सर्वगत° W —55 9 पाषण्ड° S C एव om S —55 12 भाग्य om S —55 18 अहं om G S आकुलित W त्वत्र C G —55 19 लुब्धसमृद्ध° G Ah[d] लुब्धसमिकमिभपू° S

मृदङ्गधीरध्वनिनाकृष्टो सुतमाहिते पथि· मतिमकरवम् । अनुप्रविश्य च द्यूतसभामक्षधूर्तैः समगंसि । तेषां च पञ्चविंशतिप्रकारासु सर्वासु द्यूताश्रयासु कलासु कौशलमक्षभूमिहस्तादिषु चात्यन्तदुरुपलक्ष्याणि कूटकर्माणि तन्मूलानि सावलेपान्यधिक्षेपवचनानि जीवितनिरपेक्षाणि संरम्भविचेष्टितानि सभिकप्रत्ययव्यवहाराकन्यायबलप्रलापप्रायानङ्गीकृतार्थसाधनक्षमान्बलिषु सान्त्वनानि दुर्बलेषु भर्त्सनानि पक्षरचननैपुण्यमुच्चावचानि प्रलोभनानि ग्लहप्रभेदवर्णनानि द्रव्यसंविभागौदार्यमन्तरान्तराश्लीलप्रायान्कलकलानित्येतानि चान्यानि चानुभवन्नतृप्तिमध्यगच्छम् । अहसं च किंचित्प्रमाददत्तशारे कस्मिंश्चित्कितवे । प्रतिकितवस्तु निर्दहन्निव क्रोधताम्रया दृशा मामभिवीक्ष्य 'शिक्षयसि रे द्यूतवर्त्म हासव्याजेन । आस्तामयमशिक्षितो वराकस्त्वयैव तावद्विचक्षणेन देविष्यामि' इति द्यूताध्यक्षानुमत्या व्यत्यषजत् । मया जितश्चासौ षोडशसहस्राणि दीनाराणाम् । तदर्धं सभिकाय सभ्येभ्यश्च दत्त्वार्धं स्वीकृत्योदतिष्ठम् । उदतिष्ठंश्च तत्र गतानां हर्षगर्भाः प्रशंसालापाः । प्रार्थयमानसभिकानुरोधाच्च तदगारे उदारमभ्यवहारविधिमकरवम् । यन्मूलश्च मे दुरोदरावतारः स मे विमर्दको नाम विश्वास्यतरं द्वितीयं हृदयमासीत् ।

तन्मुखेन च सारतः कर्मतः शीलतश्च सकलमेव नगरमवधार्य धूर्जटिकण्ठकल्मषकालतमे तमसि नीलनिवसनार्धोरुक·

56 1 अथ प्रविश्य G अनुप्रविश्य Bhd च om ‖ 56 2 द्यूतसमाजम° W — च om W S C we accdg to G Pr[d] —56 6 मध्ये(नार्थसाधन)क्षमान C G तिद्धार्थ°S —56 7 नैपुण्य W वागत्रम° Bhd, W, S, C — 56 11 रे om S G —56 14 [1] अनुनिद्य S —56 15 अपुगार om W. Com do not explain it —56 16 च om S श्रीलत om S —56 19 नीलवसना°W

खड्गतीक्ष्णकौक्षेयक फणिमुखकाकलीसदृशकपुरुषशीर्षक- । गत्वा कस्यचिल्लुब्धेश्वरस्य गृहे सन्धिं छित्त्वा निजगृहमिवानुप्रवि- सारमहतीमादाय निरगाम् । नीलनीरदनिकरपीवरतिमि- रातवीथ्या झटिति शतह्रदासम्पातमिव क्षणमालो- । अथासौ नगरदेवतेव नगरमोषरोषिता नि सबाध- नि सुता सालंकृता काचिदुन्मिषद्रूपणा युवतिराविरासीत् । वासु क यासीति सदयमुक्ता त्रासगद्गदमगादीत् । आर्य मस्यामर्यवर्यः कुबेरदत्तनामा प्रतिवसति । अस्म्यहं तस्य कन्या । जातमात्रां धनमित्रनाम्नेऽत्यार्थैव कस्मैचिदिभ्यकुमाराय प्रत्यजा- मे पिता । स पुनरस्मिन्नत्युदारतया पित्रोरन्ते वित्तैर्निजैः दरिद्राति सत्यथोदारक इति प्रीतलो- न वरयत्येव तस्मिन्मां तरुणीभूतामधन कामेष्वादेतरस्मै यथार्थनाम्ने सार्थवाहाय मे पिता । तदमङ्गलमद्य किल प्रभाते भावीति ज्ञात्वा प्रियतमदत्तसंकेता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन मन्मथाभिसरा तदागारमभिसरामि । तन्मा मुञ्च गृहाणै- मयामर्पितवती । इयमानश्चाहमनुगम् । एहि

57 2 बाणभानसूत्र Bhû —57 4 परभाम॰ Pa[d], परहाथ॰ C we to Bhû, Ab[d], S पजभाक्ष॰—57 5 ॰तिमिरभारनिषिद्धितायां G ; निषिद्धितायां C W —57 6 ॰विभूषणा S आर्य om S —57 9 माम॰ W —अगदीत् C W, S भदत् G —57 10 कुबेरदत्त॰ W W —57 12 अमुष्मिन् W C S दरिद्रस्यौ S दारिद्र्यागुणर॰ 13 इति च W C —57 18 मन्मथैकाभिसरा S G ॰सारा Bhû —

एष्वेव दिवसेषु काममञ्जर्याः स्वसा यवीयसी नाम पञ्चवीरगोष्ठे संगीतकमनुष्ठास्यतीति सान्द्रादरः गरजन । स चाहं सह सख्या धनमित्रेण तत्र सन्यविशे नृत्यायां च तस्यां द्वितीय रङ्गपीठ ममाभून्मन । लवनसञ्जाताश्रयश्च पञ्चशरो भावरसाना ममातिमात्रमभ्यपतत् । अथासौ नगरदेवतेव

त् । नृत्योत्थिता च सा सिद्धिलाभशोभिनी किं चालिकमकस्मादेव वा न जानेऽकम्मा प्रेक्षितेन सविभ्रममारोपितभ्रूलतमाभिवीक्ष्य सापदेशं च व्यक्तदर्शनचन्द्रिक स्मित्वा लोकलोचनमानसानुयाता प्रातिष्ठत ।

सोऽहं स्वगृहमेत्य दुर्निवारयोत्कण्ठया दूरीकृताहारस्पृह शिरःशू-लस्पर्शमपदिश्यान्वितविक्ते तल्पे मुक्तैरवयवैरशयिषि । धौतनिष्णात-श्च मदनतन्त्रे मामभ्युपेत्य धनमित्रो रहस्यकथयत् । सखे सैव धन्या गणिकादारिका यामेव भवन्मनोभिनिविशते तस्याश्च सुलक्षिता भाववृत्ति । तामप्यचिराद्दुग्रमशार बाणशयने ति । स्थानाभिनिवेशिनोश्च वामयलस्याप्य समागम । किंतु किल वारकन्यका गणिकास्वधर्मप्रतीपगामिना महोदारेणाशयेन भगिरते । गुणशुल्काह न धनशुल्का न च यौवनमिति । तस्य मुहु प्रतिषिध्याकृतार्थं तद्भगिनी

62 2 °मीन Bh4 —62 3 नृत्यायां च तस्यां S °नृत्यायां W —62. °नाथी W —62 7 °मातिमात्रमभ्य° W C —62 9 च om. W 10 सविभ्रमारोपित° W °जना W S.—62 11 °भावर्तितवक्त्र° 14 स W —62 16 °चिराय°S —62 19 समयित्व् W, S, Pa[4] accdg to Bhu C G—

च माधवसेना राजानमश्रुकण्ठकी व्यजिज्ञपताम्। देव युष्म-
रागमञ्जरी रूपानुरूपशीलशिल्पकौशला पूरयिष्यति मनोर-
[illegible] महत्याशा। सा च मूलच्छिन्ना यदियमतिक्रम्य
[illegible] गुणेभ्य एव स्वं यौवनं विचिक्रीषते कुल-
[illegible]। सा चेदियं देवपादाज्ञयापि तावत्प्र-
[illegible] तदा पेशलं भवेदिति। राज्ञा च तदनुरोधात्तथानुशिष्टा
[illegible] सा यदासीत्तदास्याः स्वसा माता च रुदितनिर्बन्धेन
समगिरेताम्। यदि कश्चिद्भुजगोऽस्माद्दिच्छया विनैनां बालां
नाशयिष्यति स तस्करवद्वध्य इति। तदेवं स्थिते धनाहृते
तत्स्वजनोऽनुमन्यते न तु धनदायासावभ्युपगच्छतीति विचिन्त्यो-
इति।

अथ मयोक्तम्। किमत्र चिन्त्यं गुणैस्तामावर्ज्य गूढमर्थैस्तत्स्वजनं
[illegible]। ततश्च कांचित्काममञ्जर्याः प्रधानदूतीं धर्मर-
नाम शाक्यभिक्षुकीं चीवरपिण्डदानादिनोपसंगृह्य तन्मुखेन
बन्धक्या पणबन्धमकरवम्। अजिनरत्नमुदारकाद्मुषित्वा
तुभ्यं देयं यदि प्रतिदानं रागमञ्जरीति। सोऽहं संप्रतिपन्नायां च
तथा तमर्थं संपाद्य मद्गुणोन्मादितायाः रागमञ्जर्याः करकिस-
[illegible]। यस्यां च निशि चर्मरत्नस्तेयवादस्तस्याः प्रारम्भे
समाहूतेषु शृण्वत्स्वेव नागरमुख्येषु मत्प्रणिधि-
[illegible] नाम भूत्वा धनमित्रमुपहृत्य बद्धतर्जयत्। उक्तं

63 5. अभ्युन om W. °वृत्तेवात्मनयं S. C; वृत्तयेवानपत्नृहिन G. w० to Ps[4].—63. 5. एवं सति स W.—63. 8. समागतो C. S.—63 G. S विक्षेप्य W.—63. 11. इति om W.—63. 16. सोऽपि प्रतिपन्नायां S. सोऽह स्वयं प्रति° G.

तेष्वेव दिवसेषु विभिना कल्पान्तेन धर्मरत्नं दोग्धुकामा कामम-
पूर्वदुग्ध क्षपणीभूतविरूपक रहस्युपसृत्य ततोपहृतं सर्वमर्थ-
तस्मै प्रत्यर्प्य सप्रश्रय च बद्धनुनीय प्रत्यगमत् । सोपि कथ-
मदनुशिष्टो हृष्टतमः स्वधर्ममेव प्र-
। काममञ्जर्यपि कतिपयैरेवाहोभिरश्मन्तकशेषमजिनरत्नद्रो-
स्वमभ्युदयमकरोत् । अथ मत्प्रयुक्तो धनमित्र पार्थिव मि-
व्यज्ञापयत् । देव येयं गणिका काममञ्जरी लोभोत्कर्षाल्लोभम-
लोकोपक्रोशपात्रमासीत्साद्य मुसलोलूखलान्यपि निरपेक्ष
। तन्मन्ये मञ्चर्मरत्नलाभहेतु तस्य खलु कल्पस्तादृशः ।
वारमुख्याभ्यश्च दुग्धे नान्यभ्य इति हि तद्गता प्रतीतिः ।
मे शङ्केति । सा सद्य एव राज्ञा सह जनन्या स-
। व्यथितवर्णेनेव मयोपह्वरे कथितम् । नूनमार्ये सर्वस्वत्या-
तदनुयोगाथाङ्गराजेन समा-
भूयोभूयश्च निर्बद्धया त्वया नियतमस्मि तदागतित्वेनाह-
। ततश्च मे भावी चित्रवधः । मृते च मयि न जीवि-
ते भगिनी त्व च निःस्वीभूता । चर्मरत्न च धनमित्रमेव
। तदियमापत्समन्ततोनर्थानुबन्धिनी । तत्किमत्र प्र-
। तया तज्जनन्या चाश्रूणि विसृज्योक्तम् । अस्त्येवै-
रहस्यम् । राज्ञश्च निर्बन्धाद्विस्त्र-

---

1. विविक्तलोक, W.—65. 2. तदपहृत. W.—65. 3. मप्रश्रयं बद्ध° G.
W. and P.ᵈ ... I—65 5. कतिपयैरेव W.—65, 9 °लाभहेतुस्त° W.
G °लाभहेतु ... लाभ हेतु C—65. 12 सर्वस्व W.—65 14.
W ममागतेन नाह W.—65 17. °बन्धिनी मदभ्यागतिनी S G. तत्
G.—

यतोऽहमेकदा रागमञ्जर्याः प्रणयकोपप्रशमनाय सानुनयं प्रणयसमर्पितमुखमधुगण्डूषमास्वादमास्वाद्य मदेनास्पृष्टशीलं हि मदोन्मादयोरमार्गेणाप्युचितकर्मस्वेव प्रवर्तनम् । नगरमिदमनयैकयैव शर्वर्या निर्धनीकृत्य त्वद्भवनं प्रवर्तितप्रियतमाप्रणामाञ्जलिशपथशतातिवर्ती मत्त इव रभसच्छिन्नशृङ्खलः कयापि धात्र्या शृगालिकाख्यया नातिपरिकरोऽसिद्वितीयो रहसा परेणोदचलम् । अभिपतन्नागरिकपुरुषानशङ्कमेव विगृह्य तस्कर इति तैरभिहन्यमानोऽपि क्रीडन्निव मदावसन्नहस्तगलितेन निस्त्रिंशेन द्वित्राः हत्वा घूर्णमानताम्रदृष्टिरपतम् । अनन्तरमार्तस्वनान्विसृजन्ती ममाभ्यासमगमत् । अथ बद्धोऽहमरिभिः । आपदा तु सद्य एव बोधितस्तत्क्षणोपजातया प्रतिभया व्यचीचरम् । अहो ममैव मोहमूला महत्यापदापतिता । प्रसृततरं च सख्यं सह धनमित्रस्य मत्परिग्रहत्वं च रागमञ्जर्याः । मदेनसा च श्वो नियतं निग्राहयिष्येते । तदियमिह प्रतिपत्तिर्यथानुष्ठीयेत मन्नियोगतस्तौ परिभ्राम्येते मा च कदाचिदन्यथाचेतसा इति । कमप्युपायमात्मनैव निर्णीय शृगालिकामगादिषम् । जरतिके या तामथलब्धा दाधगणिका रागमञ्जरिकामाजिन-

---

67 2 यतितं W पुनःपुनः प्रण° C S G It wrong on ac of आस्वादमास्वाद्य — 67 ° अनुचितकर्मसु S वर्तित° Bl — 67 4 S — 67 6. धृतैस्ता धात्र्या S — 67 S एक्याख्या S, W C, G we to Bhū. and Paᵈ अपि om W — 67 10 घूर्णमानताम्र° G S — प्रसृततरं च सख्यं G, S — 7 17 नागरिकानि W G °नीरि C W — 67. 18 च त्वं G —

रत्नमत्तेन शत्रुणा मे मित्रच्छद्मना धनमित्रेण सगमितवती हतासि । तस्य पापस्य चर्मरत्नमोषाद्दाहेतुश्च ते मया नि शल्यमुत्सृजेय जीवितमिति । सा पुनरुद्घाटितशा साश्रुगद्गदमुदञ्जलिस्तान्पुरुषान्समणाममासादितवती पुरस्ताद्वावत । भद्रका प्रतीक्षध्व कंचित्काल सर्वं मुषितमर्थजातमवगच्छेयमिति । तथेति तै. प्रतिपन्ने मीपमासाद्य सौम्य क्षमस्वास्य दासीजनस्यैकमपराधम् सकाम स्वकलत्राभिमर्शी वैरास्पद धनमित्र । स्मरस्तु ते परिचर्यामनुग्रहीतुमर्हसि दासीं रागमञ्जरीम् । कृपाजीवाजन । तद्ब्रूहि क्व निहित तस्या भूषणमिति ततो दयमान इवाहमब्रवम् । भवतु मृत्युहस्तवर्तिनः किं वैरानुबन्धेनेति । तद्वाक्यंच कर्णं एवैनामशिक्षयमेवमेव प्रतिपद्यमिति । सा तु प्रतिपद्यार्यैव जीव चिर प्रसीदन्तु वे देवता व्याघ्रराज' पौरपर्णानो मोचयतु त्वामेतेपि भद्रमुखास्तव मिति क्षणादपासरत् । आनीये चाहमारक्षिकनायकस्य रकम् ।

अथोत्तरेद्युरागत्य हृष्टतर सुभगमानी सुन्दरमन्य दचिरागाढिताधिकारस्तारुण्यमदाद्नतिपक: कान्तको नाम रिक' । किंचिदिव भर्त्सयित्वा समभ्यधत्त । न रत्न प्रतिप्रयच्छसि न वेद्मा नागरिकेभ्यश्चोरितकानि

68 3 वाक्ष्रिनआना S—68. 5 प्रतीक्षस्व C; W—६९ 6. 68 10 कृपाजीव W. कृपजीवी 8 भवत C; W—68 11 भवुष्मं ▮—68 12 इव om C G S—68 15 भाभव° Bhd. 68. मामभ्यधत्त W, C—68 20 न वेद्मा नागरि° S—

रत्नभर्तेन शत्रुणा मे मित्रच्छद्मना धनमित्रेण सगमितवती हतासि । तस्य पापस्य चर्मण्लमोघाद्दृष्टितुश्च ते मया नि शल्यमुत्सृजेय जीवितमिति । सा पुनरुद्घाटितज्ञा साश्रुगद्गदमुदञ्जलिस्तान्पुरुषान्सप्रणाममासादितवती पुरस्तादयाचत । भद्रका प्रतीक्षध्व कंचित्काल सर्वं मुषितमर्थजातमवगच्छेयमिति । तथेति तैः प्रतिपन्ने मौषमासाद्य कोऽन्य क्षमस्वास्य दासीजनस्यैकमपराधम् । सकाम त्वत्कलत्राभिमर्शी वैरास्पद धनमित्र । स्मरस्तु ते परिचयामनुग्रहीतुमर्हसि दासीं रागमञ्जरीम् । कृपाजीवाजन । तद्ब्रूहि क्व निहित तस्या भूषणमिति ततो हयमान इवाहमब्रवम् । भवतु मृत्युहस्तवर्तिन किं वैरानुबन्धेनेति । तद्वचनिव कर्णे एवैनामाशिक्षयमेवमेव प्रतिपद्य ०यमिति । सा तु प्रतिवचनार्थेव जीव चिर प्रसीदन्तु ते देवता व्यद्गुराज पौरुषप्रीतो मोचयतु त्वामेतेऽपि भद्रमुखास्तव मिति क्षणादपासरत् । आनीये चाहमारक्षिकनायकस्य रकाय् ।

अथोत्तरेद्युरागत्य हृष्टतर सुभगमानी सुन्दरम्मन्य दृष्टिराशिश्रिताधिकारस्तारुण्यमदादनतिपक्व कान्तको नाम रिक । किंचिदिव भर्त्सयित्वा समभ्यधत्त । न रत्न प्रतिप्रयच्छसि न वेद्मा नागरिकेभ्यश्चोरितकानि

68 3 ज्वलितज्ञाना S—68. 5 भर्त्सयन्ताय C, W—68 6
68 10 कृपाजीवी W कृपाजीवी S भवता C, W—68 11
G—68 12 इव om [illegible] G S—68. 16 मारक्षक° Bhd,
मामभ्यधत्त W, C—68 20 न चनु नागरिके° S—

देवमेहि त्वयास्मिन्कर्मणि साधिते चित्ररूपाभिस्त्वामहं प्रीते शपथपूर्वं तेनाभिसधाय सिद्धेर्थे भूयोपि निगडयित्वा चौर स सर्वथापक्रान्तो न तु धान्यभूमिं दर्शयिष्यतीति राज्ञे विज्ञाप्य चित्रमेन हानिष्यसि तथा च सिध्यति रहस्य च न स्रवतीति मयोक्ते सोतिहृष्टः तदुपमलाभने नियुज्य बहिरवास्थित । शासमत' एर तामिति ।

प्रीतेन च मयोक्तम् । मदुक्तमत्य सत्नय एवात्र भानयेनमिति । अथानीतेनामुना मन्मोचनाय शपथं च रहस्यानिर्भेदाय । विनिगडीकृतश्च नित्यान्धकारात्त्रिचित्तकोणाद्वारभ्योरणास्येन सुरुङ्गामकरवम् । स्नाय चैवम् । हनुमनसैवामुना मन्मोचनाय शपथं हत्वापि नास्त्यवाद्दोषेण स्पृश्य इति । निष्पततश्च मे प्रसार्यमाणबाणेस्तस्य पादेनोरसि निहत्य पतितस्य शिरो न्यकृन्तम् । अकथय च शृगालिकाम् । भण भद्रे न्यागुरसनिवेशो महानय प्रयासो वृथैव माभूत् । अमुत्र रयित्वा निवर्तिष्य इति । तदुपदर्शितविभाग भावगाह्य मज्वलत्सु मणिप्रदीपेषु वैकक्रीडासेदसुप्तस्य परिजनस्य मध्ये

---

72 2 नैन सभाय W C —72 3 प्रहनम प्रकृष्ट° C, W 8 पतनिष्यसि C. W S —72 6. मामुक्त C W S. Bhū we accdg Al[d] and Pa[d] स्न W C S —72 11 नित्यान्धकारात्कारमिद्धि° 72 12. वैन seems to be the reading of Pa[d] —72 14. कम C S see m —72 15 मा तृषैव भूत G W, C —72 17 C W —72 17 सम्यक्तपुर W C मणिदीपेषु W —72 18 G C. S मसीदत्त° C W we acdg to Pa[d]

वसन्तबन्धुः। असकृदेतत्परामृष्टा चेयमतिबाला अशक्तमार्तस्वरेण निहन्यान्मे मनोरथं ततोऽहमेवाग्रीय। तदियमत्र प्रतिपत्तिरिति। नवगदन्तालकप्रभिर्यासकल्कवर्णितं फलकमादाय मणिसमुद्गकाद्वर्णवर्तिकां समुद्धृत्य तां तथा शयानां तस्याश्च मामाबद्धाञ्जलिं चरणकमलालिखमार्यां चैताम्।

त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते।
स्वपिहि मया सह सुरतव्यतिकरखिन्नैव मा मैवम्॥

हेमकरण्डकाच्च वासताम्बूलवीटिकां कर्पूरस्फुटिकां चोपयुज्याऽलक्तकपाटलेन तद्रसेन सुधाभित्तौ चक्रवाकमिथुनं निरष्ठीवम्। अङ्गुलीयकविनिमयं च कृत्वा कथंकथमपि निरगाम्। सुरुङ्गया च प्रत्येत्य बन्धनागारं तत्र बद्धस्य नागरिकवरस्य सिंहघोषनाम्नस्तेष्वेव दिनेषु मित्रत्वेनोपचरितस्यैव मया हतस्तपस्वी कान्तकस्तस्त्वया प्रतिभिद्य लब्धव्यो मोक्ष इत्युपदिश्य सह शृगालिकया निरक्रमिषम्।

नृपतिपथे च समापत्य रक्षिकपुरुषैरगृह्ये। अचिन्तयं च। अलमस्मि जवेनापसर्तुमनावृत एवैभिरेषा पुनरबला गृह्येत। तदिदमत्र प्राप्तरूपमिति। तानेव चपलमभिपत्य स्वपृष्ठसमर्पितकूर्परः पराङ्मुखः स्थित्वा यद्यहमस्मि तस्करो भद्रा बध्नीत मां धिकारो न पुनरस्या वर्षीयस्या इत्यवादिषम्। सा तु तावदेवैनोत्समदभिप्राया तान्सप्रणाममभ्येत्य भद्रमुखा ममैष पुत्रो वायुग्रस्त

74 1 आर्तस्वरेण W C; S —74 2 आग्नेय इति W —आगोपे Pa[4], G, Bhü but add ढिाङ° —74 3 निर्यासवालुका° W S —74 4 चरण W भावद्धाञ्जलि om G °लिं W C —74 7 मदनव्यतिकर° W —74 12 प्रतिभेद्य रक्षय W C अभिद्य S.—74 15 समापन्न W, C —74 19 वर्षीयसि° W C S —74 20 अभिगम्य W अभ्युपेत्य C S.—

